॥ श्रीश्रीस्तवः ॥

श्रीगणेशाय नमः ।
स्वस्ति श्रीर्दिशतादशेषजगतां स्वर्गापवर्गस्थितीः
स्वर्गं दुर्गतिमापवर्गिकपदं सर्वं च कुर्वन्हरिः ।
यस्या वीक्ष्य मुखं तदिङ्गितपराधीनो विधत्तेऽखिलं
क्रीडेयं खलु नान्यथाऽस्य रसदा स्यादैकरस्यात्तया ॥ १॥

हे श्रीर्देवि समस्तलोकजननि त्वां स्तोतुमीहामहे
युक्तां भावय भारतीं प्रगुणय प्रेमप्रधानां धियम् ।
भक्तिं बन्धय नन्दयाश्रितमिमं दासं जनं तावकं
लक्ष्यं लक्ष्मि कटाक्षवीचिविसृतेस्ते स्याम चामी वयम् ॥ २॥

स्तोत्रं नाम किमामनन्ति कवयो यद्यन्यदीयान्गुणानन्यत्र
त्वसतोऽधिरोप्य भणितिः सा तर्हि वन्ध्या त्वयि ।
सम्यक्सत्यगुणाभिवर्णनमथो ब्रूयुः कथं तादृशी
वाग्वाचस्पतिनाप्यशक्यरचना त्वत्सद्गुणार्णोनिधौ ॥ ३॥

ये वाचां मनसां च दुर्ग्रहतया ख्याता गुणास्तावकास्तानेव
प्रति साम्बुजिह्वमुदिता यन्मामिका भारती ।
हास्यं तत्तु न मन्महे न हि चकोर्येकाऽखिलां चन्द्रिकां
नालं पातुमिति प्रगृह्य रसनामासीत सत्यां तृषि ॥ ४॥

क्षोदीयानपि दुष्टबुद्धिरपि निःस्नेहोऽप्यनीहोऽपि
ते कीर्तिं देवि लिहन्नहं न च बिभेम्यज्ञो न जिह्रेमि च ।
दुष्येत्सा तु न तावता न हि शुना लीढाऽपि भागीरथी
दुष्येच्चापि न लज्जते न च बिभेत्यार्तिस्तु शाम्येच्छुनः ॥ ५॥

ऐश्वर्यं महदेव वाऽल्पमथवा दृश्येत पुंसां हि
यत्तलक्ष्म्याः समुदीक्षणात्तव यतः सार्वत्रिकं वर्तते ।
तेनैतेन न विस्मयेमहि जगन्नाथोऽपि नारायणो धन्यं
मन्यत ईक्षणात्तव यतः स्वात्मानमात्मेश्वरः ॥ ६॥

ऐश्वर्यं यदशेषपुंसि यदिदं सौन्दर्यलावण्ययो
रूपं यच्च हि मङ्गलं किमपि यल्लोके सदित्युच्यते ।
तत्सर्वं त्वदधीनमेव यदतः श्रीरित्यभेदेन वा यद्वा
श्रीमदितीदृशेन वचसा देवि प्रथामश्नुते ॥ ७॥

देवि त्वन्महिमावधिर्न हरिणा नापि त्वया ज्ञायते
यद्यप्येवमथापि नैव युवयोः सर्वज्ञता हीयते ।
यन्नास्त्येव तदज्ञतामनुगुणां सर्वज्ञताया
विदुर्व्योमाम्भोजमिदन्तया खलु विदन् भ्रान्तोऽयमित्युच्यते ॥ ८॥

लोके वनस्पतिबृहस्पतितारतम्यं
    यस्याः कटाक्षपरिणाममुदाहरन्ति ।
सा भारती भगवती तु यदीयदासी
    तां देवदेवमहिषीं श्रियमाश्रयामः ॥ ९॥

यस्याः कटाक्षमृदुवीक्षणदीक्षितेन
    सद्यः समुल्लसितपल्लवमुल्ललास ।
विश्वं विपर्ययसमुत्थविपर्ययं त्वां
    तां देवदेवमहिषीं श्रियमाश्रयामः ॥ १०॥

॥ इति श्री कुरेश श्रीवत्सांकमिश्राचार्य एवं
श्री कुरनाथ श्रीवत्सचिन्हमिश्र श्रीस्तवः सम्पूर्णः ॥

॥ श्रीस्तवः ॥

ॐ श्रीदेवी महावक्त्रा चतुर्वर्णा चतुर्भुजा ।
प्रज्ञावीर्यसार (रस)ज्ञेया चिन्तामणिकुरु स्मृता ॥ १॥

श्रीशालिकान्तरूपा त्वं स्निग्धगात्रं च तण्डुलम् ।
ददासि मे सदा चित्रं सौभाग्यं लोकपूजितम् ॥ २॥

श्रीताण्डुली महादेवी श्रीमल्(त्) कमलशोभिता ।
ददासि मे महाभोग्यं सर्वद्रव्यहितं धनम् ॥ ३॥

श्रीव्रीहिमुक्ताजीवा त्वं सर्वभूप(सु) नन्दिनी ।
ददासि मे सुखं नित्यं जीवितं धातुकाञ्चनम् ॥ ४॥

श्रीधन (धान्य) देविका रम्या सर्वरूपवती तथा ।
सर्वज्ञानमणिश्चैव श्रीश्रीदेवी नमोऽस्तु ते ॥ ५॥

ब्रह्मादिस्तम्बपर्यन्तं जगत् स्थावरजङ्गमम् ।
शिवाङ्गमिति तत्सर्वं मां रक्षतु नमोऽस्तु ते ।
श्रीदेवी सततं मूर्ध्ना त्वां नमामि च शक्तितः ॥ ६॥

॥ ॐ तत्सत्॥